मरुतोमितराविणोवामितरोचिनोवामहद्भवन्तीतिवेति । विद्युन्मद्भिर्मरुतःस्वर्कैःस्वञ्चनैरिति-वास्वर्चनैरितिवास्वर्चिभिरितिवारथैरायातऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेनचनोन्नेनवयइवा-पततसुमायाःकल्याणकर्माणोवाकल्याणप्रज्ञावेति ॥ विद्युन्मद्भिः यवादेराकृतिगणत्वेनविद्यु-च्छब्दस्ययवाद्यन्तर्भावादयवादिभ्यइत्यत्रानुवृत्तेर्झयइतिमतुपोवत्वंनप्रवर्तते । ऋष्टिमद्भिः ह्र-स्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम । अश्वपर्णैः अशूव्याप्तौ अशूप्रुषीत्यादिनाक्वन्प्रत्ययः बहुव्री-हौपूर्वपदप्रकृतिस्वरत्वम् । वर्षिष्ठया वृद्धशब्दादातिशायनिकेइष्ठनिप्रियस्थिरेत्यादिनावर्षादेशः । पप्तत पत्लृगतौ लुङि लृदित्वात् च्लेरङादेशः पतःपुमितिपुमागमः ॥ १ ॥

द्वितीयामृचमाह—

**तेऽरुणेभिर्वरमापिशङ्गैःशुभेकंयान्तिरथतूर्भिरश्वैः ।**
**रुक्मोनचित्रःस्वधितीवान्पव्यारथस्यजंघनन्तभूम ॥२॥**

ते । अरुणेभिः । वरम् । आ । पिशङ्गैः । शुभे । कम् । यान्ति । रथतूःऽभिः । अश्वैः । रुक्मः । न । चित्रः । स्वधितिऽवान् । पव्या । रथस्य । जंघनन्त । भूम ॥ २ ॥

तेपूर्वोक्तामरुतः अरुणेभिररुणवर्णैः पिशङ्गैःपिङ्गलवर्णैःउभयवर्णोपेतैः रथतूर्भिः रथस्य प्रेरयितृभिः अश्वैः वरंदेवानांवरीतारंकंशब्दयितारंस्तुवन्तंयजमानंआयान्ति आगच्छन्ति कि-मर्थं शुभेतस्यशोभांकर्तुं अथवा शुभेउदकायवृष्ट्यर्थमित्यर्थः तेषांमरुतांगणः रुक्मोन रोचमानं सुवर्णमिवचित्रःअतिशयेनदर्शनीयः स्वधितीवानस्वधितिरितिवज्रनाम शत्रूणांखण्डकेनायुधेनो-पेतः एवंविधगणरूपास्तेमरुतः रथस्यपव्याचक्रधारया भूमभूमिंजंघनंतअत्यर्थंघ्नन्तिस्तोतृरक्ष-णार्थमागतानांतेषांमरुतांभारमसहमानाभूमिरतिपीडिताबभूवेत्यर्थः ॥ वरं व्रियन्तेदेवाअनेने-तिवरः ग्रहवृदृनिश्चीतिकरणेअप् । कं कैगैशब्दे कायतीतिकः बहुलवचनात्कप्रत्ययः । रथ-तूर्भिः तुरत्वरणे रथंतुतुरतित्वरायुक्तंकुर्वन्तीतिरथतुरः क्विप्चेतिक्विप् भिसिहल्चेतिदीर्घत्वम् । पव्या पवीरथनेमिर्भवतीतियास्कः।पूङ्पवने अस्मादचइरितिइप्रत्ययः उदात्तयणइतिविभक्तेरु-दात्तत्वम् । जंघनन्त हन्तेर्यङन्ताद्वर्तमानेछान्दसोलङ् छन्दस्युभयथेतिशपआर्धधातुकत्वादतो-लोपयलोपौ । भूम भूमिशब्दादुत्तरस्यामःसुपांसुलुगितिडादेशः छान्दसंह्रस्वत्वम् ॥२॥

---

१ नि० ११. १३. । २ नि० ११. १४. । ३ नि० ५. ५. ।

## ॥ अथतृतीयंमण्डलम् ॥

वैश्वामित्रेतृतीयेमण्डलेपञ्चानुवाकाः तत्रप्रथमेनुवाके द्वादशसूक्तानि तत्रसोमस्यमेतित्रयोविंशत्यृचंप्रथमंसूक्तं तथाचानुक्रान्तं—सोमस्यत्र्यधिकेति अस्यमण्डलस्यद्रष्टाविश्वामित्रऋषिः अनुक्तत्वात्त्रिष्टुप्छन्दः मण्डलादिष्वाग्नेयमितिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभेछन्दसिविनियोगः तथाचसूत्रम्—सोमस्यमातवसंप्रत्यग्निरितित्रीणीति ।

तत्रप्रथमा—

**सोमस्यमातवसंवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ।**
**देवाँअच्छादीद्ययुञ्जेअद्रिंशमायेअग्नेतन्वंजुषस्व ॥ १ ॥**

**सोमस्य । मा । तवसम् । वक्षि । अग्ने । वह्निम् । चकर्थ । विदथे । यजध्यै । देवान् । अच्छ । दीद्यत् । युञ्जे । अद्रिम् । शम्ऽआये । अग्ने । तन्वम् । जुषस्व ॥ १ ॥**

हेअग्ने त्वंविदथे यज्ञे यजध्यै यष्टुं सोमस्यवह्निंवोढारं यं मा मां चकर्थकृतवानसि तं मा तवसंतपस्विनं बलिनं वक्षि कामयस्व किञ्च हेअग्ने देवानच्छअभिलक्ष्यदीद्यत् दीप्यमानोहं अद्रिंग्रावाणं युञ्जे अभिषवणाययुनज्मिशमाये शाम्यामिच तथामन्त्रान्तरं— ऋतेनदेवःसविताशमायतेति । यद्वा शमायेस्तौमि शशमानः रञ्जयतीति स्तुतिकर्मसुपाठात् तथाचमन्त्रान्तरं—सोअग्नईजेशशमेचमर्तइति । किञ्च हेअग्ने तन्वंशरीरं जुषस्वरक्षायैसेवस्व यद्वा कर्माणितन्वन्तं मां सेवस्वेत्यर्थः ॥ १ ॥

अथद्वितीया—

**प्राञ्चंयज्ञंचकृमवर्धतांगीःसमिद्भिरग्निंनमसादुवस्यन् ।**
**दिवःशशासुर्विदथाकवीनांगृत्सायचित्तवसेगातुमीषुः ॥ २ ॥**

**प्राञ्चम् । यज्ञम् । चकृम । वर्धताम् । गीः । समित्ऽभिः । अग्निम् । नमसा । दुवस्यन् । दिवः । शशासुः । विदथा । कवीनाम् । गृत्साय । चित् । तवसे । गातुम् । ईषुः ॥ २ ॥**

हेअग्ने वयं यज्ञं प्राञ्चं प्रकर्षेणगच्छन्तं चकृम अकार्ष्म गीः मदीयास्तुतिः वर्धतां एधतां अग्निंसमिद्भिर्नमसाहविषाचदुवस्यन् अस्मदीयाः परिचरेयुः किञ्च दिवोद्युलोकादागत्य देवाः कवीनां स्तोतॄणां विदथा ज्ञानानि स्तोत्राणिवाशशासुः अन्वशिषन् अपिच गृत्साय गृणातेरिदंरूपं स्तोतव्यायाग्नये तवसेवृद्धाय गातुंस्तोतुं ईषुश्चित् स्तोतारइच्छन्तिच चिदितिचार्थे ॥ २ ॥

अथतृतीया—

**मयोदधेमेधिरःपूतदक्षोदिवःसुबन्धुर्जनुषापृथिव्याः ।**
**अविन्दन्नुदर्शतमप्स्व१न्तर्देवासोअग्निमपसिस्वसॄणाम् ॥ ३ ॥**

मयः । दधे । मेधिरः । पूतऽदक्षः । दिवः । सुऽबन्धुः । जनुषा ।
पृथिव्याः । अविन्दन् । ऊँ इति । दर्शतम् । अप्ऽसु । अन्तः ।
देवासः । अग्निम् । अपसि । स्वसॄणाम् ॥ ३ ॥

मेधिरः मेधावान् प्राज्ञः पूतदक्षः शुद्धबलः जनुषा जन्ममात्रेणसुबन्धुः शोभनबन्धुः स्वतएवबन्धुरितियावत् योग्निर्दिवोद्युलोकस्य पृथिव्याः भूमेश्चमयः सुखंदधेविदधाति देवानांमनुष्याणांचसुखंकरोतीतियावत् तंदर्शतं दर्शनीयमग्निं देवासोदेवाः स्वसॄणां सरणशीलानांनदीनामप्स्वन्तर्गूढं स्थितं अपसि यज्ञवहनरूपेकर्मणिनिमित्ते उइतिपूरणः अविन्दन् लब्धवन्तः ॥ ३ ॥

अथचतुर्थी—

**अवर्धयन्त्सुभगंसप्तयह्वीःश्वेतंजज्ञानमरुषंमहित्वा ।**
**शिशुंनजातमभ्यारुरश्वादेवासोअग्निंजनिमन्वपुष्यन् ॥ ४ ॥**

अवर्धयन् । सुऽभगम् । सप्त । यह्वीः । श्वेतम् । जज्ञानम् । अरुषम् ।
महिऽत्वा । शिशुम् । न । जातम् । अभि । आरुः । अश्वाः ।
देवासः । अग्निम् । जनिमन् । वपुष्यन् ॥ ४ ॥

सप्त सर्पणशीलाः यह्वीर्यह्व्यः महत्योनद्यः सुभगं शोभनधनं श्वेतंशुभ्रं जज्ञानं जातं महित्वामहत्त्वेन अरुषमारोचमानं अप्सुस्थितमग्निंअवर्धयन् स्वकार्यभूताभिरोषधीभिर्वृद्धिंप्रापितवत्यः यद्वा दिव्यमग्निं अपोवर्धयन्ति अविन्धनत्वात्तस्य किञ्च शिशुंनजातं यथाजातं शिशुंअश्वाः वडवाः अभ्यारुः अभिगच्छन्ति तथानद्यः उत्पन्नमग्निं अभ्यारुः अभिजग्मुः अपिचदेवासः देवाः अग्निंजनिमन् जन्मन्युदकेवा वपुष्यन् वपुर्दीप्तिमकुर्वन् ॥ ४ ॥

अथपञ्चमी—

शुक्रेभिरङ्गैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ।
शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ ५ ॥ १३ ॥

शुक्रेभिः । अङ्गैः । रजः । आऽततन्वान् । क्रतुम् । पुनानः ।
कविऽभिः । पवित्रैः । शोचिः । वसानः । परि । आयुः । अपाम् ।
श्रियः । मिमीते । बृहतीः । अनूनाः ॥ ५ ॥ १३ ॥

अग्निः शुक्रेभिः शुक्रैरङ्गैस्तेजोभिरजोन्तरिक्षमाततन्वान् आततन्वन् व्याप्नुवन् क्रतुं कर्मणांकर्तारं यजमानं कविभिः क्रान्तप्रज्ञैः स्तोतव्यैर्वापवित्रैः शोधकैस्तेजोभिः पुनानःशोधयन् शोचिर्दीप्तिंवस्त्रस्थानीयंपरिपरितोवसानः आच्छादयन् अपांअपस्यतां कर्मवतां आयुरन्नं बृहतीः प्रभूताः अनूनाः संपूर्णाः श्रियः संपदश्च मिमीतेकरोति ॥ ५ ॥

॥ इतिद्वितीयस्याष्टमेत्रयोदशोवर्गः ॥ १३ ॥

अथषष्ठी—

वव्राजासीमनदतीरदब्धादिवोयह्वीरवसानाअनग्नाः ।
सनाअत्रयुवतयःसयोनीरेकंगर्भंदधिरेसप्तवाणीः ॥ ६ ॥

वव्राज । सीम् । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः ।
अनग्नाः । सनाः । अत्र । युवतयः । सऽयोनीः । एकम् । गर्भम् ।
दधिरे । सप्त । वाणीः ॥ ६ ॥

अनदतीः अभक्षयन्तीः अदब्धाः अहिंसिताः मातृभूताः अपोग्निः सींसर्वतोवव्राज व्रजति अग्निरपांशोषकः तंचापः शमयन्तितदुभयमिहनास्तीत्युक्तंभवति कीदृश्यस्ताः दिवो-यह्वीः अन्तरिक्षस्यापत्यभूताः अवसानाः वस्त्रमनाच्छादयन्त्यः वस्त्रस्थानीयस्यजलस्य वि-द्यमानत्वात् अतएवनग्नाः किञ्च ताअपिसनाः सनातन्यः युवतयः नित्यतरुण्यः नित्यवृद्धाइ-त्यर्थः-सयोनीः समानमन्तरिक्षंयोनिस्थानंयासांताः सप्तवाणीः नद्यः एकं अग्निंगर्भंगर्भस्थं दधिरेदधते ॥ ६ ॥

अथसप्तमी—

स्तीर्णाअस्यसंहतोविश्वरूपाघृतस्ययोनौस्रवथेमधूनाम् ।
अस्थुरत्रधेनवःपिन्वमानामहीदस्मस्यमातरासमीची ॥ ७ ॥

स्तीर्णाः । अस्य । सम्ऽहतः । विश्वऽरूपाः । घृतस्य । योनौ ।
स्रवथे । मधूनाम् ।अस्थुः । अत्र । धेनवः । पिन्वमानाः । मही इति ।
दस्मस्य । मातरा । समीची इति सम्ऽईची ॥ ७ ॥

घृतस्योदकस्य योनौस्थाने अन्तरिक्षे संहतः पुञ्जीभूताः हन्तेःक्विप् विश्वरूपाः नाना-रूपाः स्तीर्णाः सर्वत्रप्रसृताः अस्याग्नेःरश्मयः मधूनामुदकानां स्रवथेस्रवणे निमित्ते अस्थु-स्तिष्ठन्ति पिन्वमानाः पूर्यमाणाः अत्रअग्नौआपः धेनवः सर्वेषां प्रीणयित्र्यः अभवन् समी-ची समञ्चत्यौ शोभमाने मही महत्यौद्यावापृथिव्यौ दस्मस्यदर्शनीयस्याग्नेर्मातरा मातरौ भवतः ॥ ७ ॥

अथाष्टमी—

बभ्राणःसूनोसहसोव्यद्यौद्दधानःशुक्रारभसावपूंषि ।
श्चोतन्तिधारामधुनोघृतस्यवृषायत्रवावृधेकाव्येन ॥ ८ ॥

बभ्राणः । सूनो इति । सहसः । वि । अद्यौत् । दधानः । शुक्रा ।
रभसा । वपूंषि । श्चोतन्ति । धाराः । मधुनः । घृतस्य । वृषा ।
यत्र । ववृधे । काव्येन ॥ ८ ॥

हेसहसःसूनो सहसस्पुत्रअग्ने बभ्राणः सर्वैर्धार्यमाणःत्वं शुक्राशुक्राणिभास्वराणिरभसा वेगवन्ति वपूंषि अर्चींषिदधानः धारयंस्त्वं व्यद्यौत् वियोतसे वृषाग्निः यत्रयस्मिन्यजमानेकाव्ये नस्तोत्रेणववृधेवृद्धिंप्रामोतितदानींमधुनः अत्यन्तं मधुरस्यघृतस्यउदकस्यधाराः श्चोतन्ति स्र-वन्तेयदायजमानस्तोत्रेणअग्निस्तुष्टोभवति तदानींवृष्टिर्भवतीत्यर्थः ॥ ८ ॥

अथनवमी—

पितुश्चिदूधर्जनुषाविवेदव्यस्यधाराअसृजद्विधेनाः ।
गुहाचरन्तंसखिभिःशिवेभिर्दिवोयह्वीभिर्नगुहाबभूव ॥ ९ ॥

पितुः । चित् । ऊधः । जनुषा । विवेद । वि । अस्य । धाराः ।
असृजत् । वि । धेनाः । गुहा । चरन्तम् । सखिऽभिः । शिवेभिः ।
दिवः । यह्वीभिः । न । गुहा । बभूव ॥ ९ ॥

पितुः अन्तरिक्षस्यऊधः ऊधःस्थानीयजलप्रदेशंअयमग्निर्जनुषास्वयमेवविवेद जानाति किंचायमग्निः अस्योधसःसंबन्धिन्योधाराः पयोधाराः व्यसृजत् विसृष्टवान् धेनामाध्यमिका-वाचः विसृजति शिवेभिः शिवंकरैः सखिभिः आत्मनःसखिभूतैर्वायुभिः दिवोयह्वीभिः अन्त-रिक्षस्यापत्यभूताभिरद्भिश्चसह गुहागुहायांचरन्तं वर्तमानमेनमग्निंगुहाचित् गुहायांस्थितः को-पिनबभूव प्राप्तुंसमर्थोनाभवत् ॥ ९ ॥

अथदशमी—

पितुश्चगर्भंजनितुश्चबभ्रेपूर्वीरेकोअधयत्पीप्यानाः ।
वृष्णेसपत्नीशुचयेसबन्धूउभेअस्मैमनुष्ये३निपाहि ॥१०॥१४॥

पितुः । च । गर्भम् । जनितुः । च । बभ्रे । पूर्वीः । एकः ।
अधयत् । पीप्यानाः । वृष्णे । सपत्नी इति सऽपत्नी । शुचये ।
सबन्धू इति सऽबन्धू । उभे इति । अस्मै । मनुष्ये३इति ।
नि । पाहि ॥ १० ॥ १४ ॥

अयमग्निः पितुश्च अन्तरिक्षस्यगर्भं वृष्टिद्वारागर्भभूतं जनितुः सर्वस्यलोकस्यजनयितुश्च ब्रह्मणश्च लोकं बभ्रेबिभर्ति एकएवाग्निः पूर्वीर्बह्वीः पीप्यानाः प्यायमानाः वृद्धिंगताः ओषधीः अधयत धयतिभक्षयति सपत्नी समानएकः सूर्यःपतिर्ययोःते मनुष्ये मनुष्येभ्योहिते उभेद्यावापृथिव्यौ वृष्णेवर्षित्रे अस्मैशुचयेअग्नये सबन्धूभवतः अनयोः अग्निरेवबन्धुरित्यर्थः हे अग्ने त्वंतेद्यावापृथिव्यौ निपाहि नितरांरक्ष ॥ १४ ॥

॥ इतिद्वितीयस्याष्टमेचतुर्दशोवर्गः ॥ १४ ॥

अथैकादशी—

उरौमहाँअनिबाधेववर्धापोअग्निंयशसःसंहिपूर्वीः ।
ऋतस्ययोनावशयद्दमूनाजामीनामग्निरपसिस्वसॄणाम् ॥ ११ ॥

उरौ । महान् । अनिऽबाधे । ववर्ध । आपः । अग्निम् । यशसः । सम् । हि । पूर्वीः । ऋतस्य । योनौ । अशयत् । दमूनाः । जामीनाम् । अग्निः । अपसि । स्वसॄणाम् ॥ ११ ॥

महानयमग्निः अनिबाधे असंबाधे उरौविस्तीर्णेन्तरिक्षे ववर्ध वर्धते अस्यवर्धनेकारणमाह—हियस्मात्कारणात् पूर्वीर्बह्व्यः यशसः यशोन्नं तद्वत्यआपः अग्निं संवर्धयन्ति एवं अद्भिर्वृद्धिंप्राप्तोग्निः ऋतस्यउदकस्ययोनौ स्थानेन्तरिक्षेस्थितः स्वसॄणांस्वतःसरन्तीनां जामीनां भगिनीस्थानीयानां नदीनांहेतुभूतेअपसिपयसि दमूनाः दान्तमनाःसन् अशयत् शेते ॥ ११ ॥

अथद्वादशी—

अक्रोनबभ्रिःसमिथेमहीनांदिदृक्षेयःसूनवेभाऋजीकः ।
उदुस्रियाजनितायोजजानापांगर्भोनृतमोयह्वोअग्निः ॥ १२ ॥

अक्रः । न । बभ्रिः । समऽइथे । महीनाम् । दिदृक्षेयः । सूनवे । भाःऽऋजीकः । उत् । उस्रियाः । जनिता । यः । जजान । अपाम् । गर्भः । नृऽतमः । यह्वः । अग्निः ॥ १२ ॥

जनिता सर्वस्यलोकस्यजनयिता अपांउदकानांगर्भः गर्भरूपः नृतमः नेतृतमः अतिशयेनमनुष्याणांरक्षिता यह्वः महान् योग्निः अक्रः परेषामाक्रमितापरैरनाक्रमणीयोवा नेतिपादपूरणः समिथेसङ्ग्रामे महीनांमहतीनांस्वसेनानां बभ्रिःभर्ता दिदृक्षेयः सर्वैर्दर्शनीयः भाऋजीकः स्वदीप्त्याप्रकाशमानः सोग्निः सूनवेहविषांप्रदात्रे यजमानाय तदर्थं उस्रियाः अपः उज्जजानउदजनयत् सूनवे षूप्रेरणे इत्यस्माद्धातोरौणादिकोनुप्रत्ययः ॥ १२ ॥

अथत्रयोदशी—

अपांगर्भंदर्शतमोषधीनांवनांजजानसुभगाविरूपम् ।
देवासश्चिन्मनसासंहिजग्मुःपनिष्ठंजातंतवसंदुवस्यन् ॥ १३ ॥

अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् । वना । जजान ।
सुऽभगा । विऽरूपम् । देवासः । चित् । मनसा । सम् । हि ।
जग्मुः । पनिष्ठम् । जातम् । तवसम् । दुवस्यन् ॥ १३ ॥

सुभगा सुभाग्या वना सर्वैर्वननीया अरणिः दर्शतं दर्शनीयं विरूपं नानाविधरूपं अपां ओषधीनांचगर्भंआग्नजजान अजनयत् देवासश्चित् सर्वेदेवाअपि पनिष्ठं स्तुत्यं तवसं वृद्धं जातं जातमात्रं तमग्निं मनसास्तुत्यासंजग्मुः उपागच्छन् हीतिपूरणः तएवदुवस्यन्नपर्यचरन् ॥ १३ ॥

अथचतुर्दशी—

बृहन्तइद्भानवोभाऋजीकमग्निंसचन्तविद्युतोनशुक्राः ।
गुहेववृद्धंसदसिस्वेअन्तरपारऊर्वेअमृतंदुहानाः ॥ १४ ॥

बृहन्तः । इत् । भानवः । भाःऽऋजीकम् । अग्निम् । सचन्त ।
विऽद्युतः । न । शुक्राः । गुहाऽइव । वृद्धम् । सदसि । स्वे ।
अन्तः । अपारे । ऊर्वे । अमृतम् । दुहानाः ॥ १४ ॥

अपारेअगाधेऊर्वेसमुद्रे अन्तर्मध्ये अमृतं उदकंदुहानाः क्षरन्तः बृहन्तइत् महान्तएव भानवःरश्मयः शुक्राः दीप्यमानाः विद्युतोन विद्युतइवस्वेस्वकीयेसदसिसदनेअन्तरिक्षे गुहेवगुहायामिववृद्धंप्रवृद्धं भाऋजीकं प्रभयादीप्यमानं अग्निंसचन्तआश्रयन्ति ॥ १४ ॥

अथपञ्चदशी–

ईळेचत्वायजमानोहविर्भिरीळेसखित्वंसुमतिंनिकामः।
देवैरवोमिमीहिसंजरित्रेरक्षाचनोदम्येभिरनीकैः॥ १५ ॥ १५ ॥

ईळे। च। त्वा। यजमानः। हविःऽभिः। ईळे। सखिऽत्वम्। सुऽमतिम्। निऽकामः। देवैः। अवः। मिमीहि। सम्। जरित्रे। रक्ष। च। नः। दम्येभिः। अनीकैः॥ १५ ॥ १५ ॥

यजमानोऽहं हविर्भिःसाधनैः त्वात्वां ईळे पूजयामि च पश्वादिलक्षणंधनंचयाचे सुमतिंशोभनांमतिं धर्मविषयांबुद्धिं निकामः नितरांकामयमानः त्वयासहसखित्वं ईळेयाचे त्वंदेवैःसहजरित्रेस्तोत्रेस्तोत्रंकुर्वते मह्यं अस्मदर्थं अवः पश्वादिविषयांरक्षांसंमिमीहिकुरु दम्येभिर्दमनीयैर्नियन्तव्यैः प्रयत्ननियन्तव्यतया उच्छृंखलतोक्ता अनीकैस्तेजोभिः नः अस्मान् रक्षच॥ १५ ॥

॥ इतिद्वितीयस्याष्टमेपञ्चदशोवर्गः॥ १५ ॥

अथषोडशी–

उपक्षेतारस्तवसुप्रणीतेग्नेविश्वानिधन्यादधानाः।
सुरेतसाश्रवसातुञ्जमानाअभिष्यामपृतनायूँरदेवान् ॥ १६ ॥

उपऽक्षेतारः। तव। सुऽप्रनीते। अग्ने। विश्वानि। धन्या। दधानाः। सुऽरेतसा। श्रवसा। तुञ्जमानाः। अभि। स्याम। पृतनाऽयून्। अदेवान्॥ १६ ॥

हेसुप्रणीते शोभनप्रणयन हेअग्ने तवउपक्षेतारः उपगन्तारः अत्रक्षितिर्गत्यर्थेवर्तते विश्वानिसर्वाणिधन्याधन्यानिपश्वादिधनप्राप्तिहेतुभूतानिकर्माणि दधानाः विदधानाः कुर्वन्तः तुञ्जमानाः हवींषिप्रयच्छन्तोवयं सुरेतसाशोभनवीर्येण श्रवसात्वत्कृतेनान्नेनअदेवान्देवेभ्योन्यान् नञिवयुक्तन्यायेन राक्षसाएवगृह्यन्ते यज्ञविघ्नकारिणस्तान् पृतनायूंश्चशरीराद्युपद्रवकारिणः शत्रूंश्चअभिष्यामअभिभवेम यद्वा देवानअपूजयतः शत्रूनितिवायोज्यम्॥ १६ ॥

अथसप्तदशी—

आदेवानामभवःकेतुरग्नेमन्द्रोविश्वानिकाव्यानिविद्वान् ।
प्रतिमर्ताँअवासयोदमूनाअनुदेवान्रथिरोयासिसाधन् ॥ १७ ॥

आ । देवानाम् । अभवः । केतुः । अग्ने । मन्द्रः । विश्वानि ।
काव्यानि । विद्वान् । प्रति । मर्तान् । अवासयः । दमूनाः । अनु ।
देवान् । रथिरः । यासि । साधन् ॥ १७ ॥

हेअग्ने मन्द्रः स्तुत्यः केतुर्यज्ञेषुदेवानां प्रज्ञापकस्त्वं आभवः आसमन्ताद्भवसि सर्वव्यापकोभवसीत्यर्थः किंच विश्वानि सर्वाणिकाव्यानियजमानादिभिःकृतानि स्तोत्राणिविद्वान् जानन् दमूनादान्तमनाः त्वंमर्तान् मर्त्यान् स्तोतॄन् स्वाभिलषितवस्तुसंपादनेनप्रीतान् विधाय गृहेषुप्रत्यवासयः प्रतिवासयसि रथिरः रथी त्वं साधन् देवानांहितानिकर्माणिसाधयन् देवान् अनुयासिच अनुगच्छसिच ॥ १७ ॥

अथाष्टादशी—

निदुरोणेअमृतोमर्त्यानांराजाससादविदथानिसाधन् ।
घृतप्रतीकउर्वियाव्यद्यौदग्निर्विश्वानिकाव्यानिविद्वान् ॥ १८ ॥

नि । दुरोणे । अमृतः । मर्त्यानाम् । राजा । ससाद । विदथानि ।
साधन् । घृतऽप्रतीकः । उर्विया । वि । अद्यौत् । अग्निः ।
विश्वानि । काव्यानि । विद्वान् ॥ १८ ॥

अमृतः नित्यः राजा राजमानोयोग्निः विदथानियज्ञान् साधन् साधयन् मर्त्यानां अग्निहोत्रिणां दुरोणेगृहे निषसाद निषीदति विश्वानिकाव्यानिविद्वान् जानन् घृतप्रतीकः घृतेनसंधुक्षितावयवः उर्वियाविस्तीर्णः सोग्निः व्यद्यौत् विद्योतते ॥ १८ ॥

अथैकोनविंशी—

आनोगहिसख्येभिःशिवेभिर्महान्महीभिरूतिभिःसरण्यन् ।
अस्मेरयिंबहुलंसन्तरुत्रंसुवाचंभागंयशसंकृधीनः ॥ १९ ॥

आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः ।
ऊतिऽभिः । सरण्यन् । अस्मे इति । रयिम् । बहुलम् ।
सम्ऽतरुत्रम् । सुऽवाचम् । भागम् । यशसम् । कृधि । नः ॥ १९ ॥

सरण्यन् सर्वत्रसरणंगमनमिच्छन् महांस्त्वं शिवेभिः शिवकरैः सख्येभिः सख्यैः सखिकर्मभिः महीभिः महतीभिरूतिभीरक्षाभिश्चनोस्मान् प्रतिआगहि आगच्छ अस्मे अस्मभ्यं बहुलंविस्तीर्णं संतरुत्रं सर्वेषामुपद्रवाणां संतारकं सुवाचं शोभनवाचं भागंसर्वैर्भजनीयंयशसं यशसाकीर्त्यासंयुक्तंरयिंधनं नोस्मभ्यं कृधिदेहि अस्मभ्यमितिपुनर्वचनमादरातिशयार्थम् ॥ १९ ॥

अथविंशी—

एतातेअग्नेजनिमासनानिप्रपूर्व्यायनूतनानिवोचम् ।
महान्तिवृष्णेसवनाकृतेमाजन्मंजन्मन्निहितोजातवेदाः ॥ २० ॥

एता । ते । अग्ने । जनिम । सनानि । प्र । पूर्व्याय । नूतनानि ।
वोचम् । महान्ति । वृष्णे । सवना । कृता । इमा । जन्मन्ऽजन्मन् ।
निऽहितः । जातऽवेदाः ॥ २० ॥

हेअग्ने पूर्व्यायपुरातनायतेतुभ्यं सनानिसनातनानिमहद्भिःसंभजनीयानिवानूतनानि अन्येष्वविद्यमानानि अद्यतनानिवा एताएतानिजनिम जन्मानिकर्माणिस्तोत्राणिवाप्रवोचं प्रोक्तवानस्मि जातवेदाः जातप्रज्ञोजातधनोवा जन्मन्जन्मन् जायन्तइतिजन्मानः तेषुसर्वेषु मनुष्येषुनिहितोयागार्थं तस्मैवृष्णे संपदांवर्षित्रे अग्नये इमाइमानि महान्तिबृहन्ति सवना सवनानि कृता कृतानि ॥ २० ॥

अथैकविंशी—

जन्मंजन्मन्निहितोजातवेदाविश्वामित्रेभिरिध्यतेअजस्रः ।
तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ २१ ॥

जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः । विश्वामित्रेभिः ।
इध्यते । अजस्रः । तस्य । वयम् । सुऽमतौ । यज्ञियस्य ।
अपि । भद्रे । सौमनसे । स्याम ॥ २१ ॥

जन्मनजन्मन् सर्वेषुमनुष्येषुनिहितोजातवेदाः विश्वामित्रेभिः विश्वामित्रैः पूजायांब-हुवचनं महर्षिणा विश्वामित्रेण योजातवेदाः अजस्रः अजस्रं अनवरतं इध्यते दीप्यते सुमतौ कल्याण्यांमतौ वर्तमानावयं तस्ययज्ञियस्ययज्ञार्हस्याग्नेर्भद्रे भजनीये सौमनसे सुमनोभावे अ-नुग्रहबुद्धौ अपिस्याम अपिभवेम प्रार्थनायांलिङ् ॥ २१ ॥

अथद्वाविंशी—

इमंयज्ञंसहसावन्त्वंनोदेवत्राधेहिसुक्रतोरराणः ।
प्रयंसिहोतर्बृहतीरिषोनोग्नेमहिद्रविणमायजस्व ॥ २२ ॥

इमम् । यज्ञम् । सहसाऽवन् । त्वम् । नः । देवऽत्रा । धेहि ।
सुक्रतो इति सुऽक्रतो । रराणः । प्र । यंसि । होतः । बृहतीः ।
इषः । नः । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ २२ ॥

हेसहसावन् सहस्वन् बलवन् सुक्रतोशोभनकर्मन् हेअग्ने रराणः सर्वदारममाणः शब्दं कुर्वाणोवात्वं नोस्मदीयमिमंयज्ञं देवत्रादेवेषुधेहिनिधेहि हेहोतः देवानामाह्वातः बृहतीः इषः अ-न्नानिनोस्मभ्यं प्रयंसिप्रयच्छ हेअग्नेमहिमहत् द्रविणंपश्वादिलक्षणं धनं आयजस्व प्रयच्छ अत्रयजिर्दानकर्मा ॥ २२ ॥

अथत्रयोविंशी—

इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ २३ ॥ १६ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ २३ ॥ १६ ॥

इयंसर्वेषांपशूनांपशुपुरोडाशस्यस्विष्टकृतःपुरोनुवाक्या सूत्र्यतेहि—इळामग्नेपुरुदंसंसनिंगोर्होतायक्षदग्निंपुरोळाशस्यस्वदस्वहव्यासमिषोदिदीहीतिपुरोळाशस्विष्टकृतइति । हेअग्नेपुरुदंसंबहुकर्माणं गोः गवांसनिंप्रदात्रीं इळांभूमिंहवमानायस्तुवते मह्यंशश्वत्तमं चिरकालं यथाभवतितथा साध साधय नोस्माकंसूनुःपुत्रः तनयः सन्तानस्यविस्तारयिता विजावापुत्रपौत्रादिरूपेणस्वयंविजायतइतिविजावास्यात् हेअग्ने साप्रसिद्धातेसुमतिः त्वदीयाअनुग्रहबुद्धिः अस्मेअस्मासु भूतुभवतु ॥ २३ ॥

॥ इतिद्वितीयस्याष्टमेषोडशोवर्गः ॥ १६ ॥

वैश्वानरायेतिपञ्चदशर्चंद्वितीयंसूक्तं तथाचानुक्रान्तं—वैश्वानरायपञ्चोनावैश्वानरीयंतुजागतंत्विति विश्वामित्रऋषिः जगतीछन्दः वैश्वानरोग्निर्देवता पृष्ठ्याभिप्लविकयोस्तृतीयेहन्याग्निमारुतेवैश्वानरायधिषणामितिवैश्वानरनिविद्धानीयंसूक्तं तृतीयस्येतिखण्डेसूत्रितम्—वैश्वानरायधिषणांधारावरामरुतइति ।

तत्रप्रथमा—

**वैश्वानरायधिषणामृतावृधेघृतंनपूतमग्नयेजनामसि ।**
**द्विताहोतारंमनुषश्चवाघतोधियारथंनकुलिशःसमृण्वति ॥ १ ॥**

**वैश्वानराय । धिषणाम् । ऋतऽवृधे । घृतम् । न । पूतम् ।**
**अग्नये । जनामसि । द्विता । होतारम् । मनुषः । च । वाघतः ।**
**धिया । रथम् । न । कुलिशः । सम् । ऋण्वति ॥ १ ॥**

ऋतवृधे ऋतस्योदकस्ययज्ञस्यवावर्धयित्रेवैश्वानराय वैश्वानरशब्दोयास्केनव्याख्यातः- वैश्वानरःकस्माद्विश्वान्नरान्नयतिविश्वएवंनरानयंतीतिवाअपिवाविश्वानरएवस्यात्प्रत्यृतःसर्वाणिभूतानितस्यवैश्वानरस्तस्यैषाभवतीति[1] । तस्मैअग्नये पूतंघृतंन घृतमिव धिषणांस्तुतिंजनामसिजनयामः यथाघृतंप्रीतिंजनयति तथाप्रीतिंकरोमीत्यर्थः द्विताद्विधागार्हपत्याहवनीयरूपाभ्यांयुक्तं होतारंदेवानामाह्वातारमग्निंमनुषः मनुष्याः वाघतश्चऋत्विजश्च धियाकर्मणाकुलिशोवास्यादिः रथंन रथमिव समृण्वतिसंस्कुर्वन्ति ॥ १ ॥

---

१ नि० ७.२१.।

अथद्वितीया—

सरोचयज्जनुषारोदसीउभेसमात्रोरभवत्पुत्रईड्यः ।
हव्यवाळग्निरजरश्चनोहितोदूळभोविशामतिथिर्विभावसुः ॥ २ ॥

सः । रोचयत् । जनुषा । रोदसी इति । उभे इति । सः । मात्रोः ।
अभवत् । पुत्रः । ईड्यः । हव्यऽवाट् । अग्निः । अजरः ।
चनःऽहितः । दुःऽदभः । विशाम् । अतिथिः । विभाऽवसुः ॥ २ ॥

सोग्निर्जनुषा जन्मनाउभेरोदसी द्यावापृथिव्यौ रोचयत् अरोचयत् प्रकाशयति स-मात्रोर्द्यावापृथिव्योः ईड्यः स्तुत्यः पुत्रोभवत् हव्यवाट् हव्यानां वोढा अग्निः अङ्गनादिगु-णयुक्तः अजरः जरारहितः चनोहितः चनोन्नंहितंयजमानेनिहितंयेनासौचनोहितः दूळभः हिंसितुमशक्यः सोयंविभावसुः प्रभाधनः विशांमनुष्याणां अतिथिरिवपूज्योभवति ॥ २ ॥

अथतृतीया—

क्रत्वादक्षस्यतरुषोविधर्मणिदेवासोअग्निंजनयन्तचित्तिभिः ।
रुरुचानंभानुनाज्योतिषामहामत्यंनवाजंसनिष्यन्नुपब्रुवे ॥ ३ ॥

क्रत्वा । दक्षस्य । तरुषः । विऽधर्मणि । देवासः । अग्निम् ।
जनयन्त । चित्तिऽभिः । रुरुचानम् । भानुना । ज्योतिषा ।
महाम् । अत्यम् । न । वाजम् । सनिष्यन् । उप । ब्रुवे ॥ ३ ॥

चित्तिभिर्ज्ञानैः उपलक्षितादेवासः देवाः तरुषः व्यसनेभ्यस्तारकस्यदक्षस्यबलस्य क्र-त्वाकर्मणा विधर्मणि विधारकेयज्ञे अग्निंजनयन्त अजनयन् भानुनाभासमानेन ज्योतिषारु-रुचानं रोचमानं महां महान्तं अग्निंअत्यंन भारसहमश्वमिव वाजमन्नं सनिष्यन् लिप्समानोहं उपब्रुवे स्तौमि ॥ ३ ॥

अथचतुर्थी—

आमन्द्रस्यसनिष्यन्तोवरेण्यंवृणीमहेअह्रयंवाजमृग्मियम् ।
रातिंभृगूणामुशिजंकविक्रतुमग्निंराजन्तंदिव्येनशोचिषा ॥ ४ ॥

आ। मन्द्रस्य। सनिष्यन्तः। वरेण्यम्। वृणीमहे। अह्रयम्।
वाजम्। ऋग्मियम्। रातिम्। भृगूणाम्। उशिजम्।
कविऽक्रतुम्। अग्निम्। राजन्तम्। दिव्येन। शोचिषा॥ ४॥

मन्द्रस्यस्तुत्यस्य वैश्वानरस्य संबन्धिनंवरेण्यंवरणीयं अह्रयंअलज्जावहं ऋग्मियंप्रशस्यं वाजमन्नं सनिष्यन्तः लिप्समानावयं भृगूणांऋषीणां रातिं अभिलषितार्थप्रदातारं उशिजं आभिलष्यं तं कविक्रतुंक्रान्तप्रज्ञं दिव्येनदिविभवेन शोचिषारोचिषा राजन्तंभ्राजमानमग्निंआ-वृणीमहे संभजामहे॥ ४॥

अथपञ्चमी—

अग्निंसुम्नायंदधिरेपुरोजनावाजंश्रवसमिहवृक्तबर्हिषः।
यतस्रुचःसुरुचंविश्वदेव्यंरुद्रंयज्ञानांसाधदिष्टिमपसाम्॥५॥१७॥

अग्निम्। सुम्नार्य। दधिरे। पुरः। जनाः। वाजऽश्रवसम्। इह।
वृक्तऽबर्हिषः। यतऽस्रुचः। सुऽरुचम्। विश्वऽदेव्यम्। रुद्रम्।
यज्ञानाम्। साधत्ऽइष्टिम्। अपसाम्॥ ५॥ १७॥

वृक्तबर्हिषः स्तीर्णबर्हिषः यतस्रुचःप्राप्तस्रुचः ऋत्विजः सुम्नायसुखार्थं वाजश्रवसंमनुष्येभ्यः प्रेरितान्नं सुरुचं प्रशस्तदीप्तिमन्तं विश्वदेव्यं विश्वेभ्योदेवेभ्योहितं रुद्रंदुःखानांद्रावकं अपसांकर्मवतांयज्ञानां यजन्तीतियज्ञायजमानाः तेषां साधदिष्टिं साधितयज्ञं तादृशमग्निं इह-यज्ञे जनाःस्तोतारः पुरोदधिरे स्तुवन्ति॥ ५॥

॥ इतिद्वितीयस्याष्टमेसप्तदशोवर्गः॥ १७॥

अथषष्ठी—

पावकशोचेतवहिक्षयंपरिहोतर्यज्ञेषुवृक्तबर्हिषोनरः।
अग्नेदुवइच्छमानासआप्यमुपासतेद्रविणंधेहितेभ्यः॥ ६॥

पावकऽशोचे । तव । हि । क्षयम् । परि । होतः । यज्ञेषु ।
वृक्तऽबर्हिषः । नरः । अग्ने । दुवः । इच्छमानासः । आप्यम् ।
उप । आसते । द्रविणम् । धेहि । तेभ्यः ॥ ६ ॥

हेपावकशोचे शोधकदीप्ते हेहोतः देवानामाह्वातः हेअग्ने यज्ञेषुपरिपरितः वृक्तबर्हिषः स्तीर्णबर्हिषः दुवःपरिचरणमिच्छमानासः इच्छन्तोनरोनेतारोयजमानाः आप्यं आप्तुंयोग्यं तवत्वत्संबन्धिनंक्षयं निवासं यागगृहं उपासते उपविशति हियस्मात् तेभ्योद्रविणंधनंधेहि विधेहि ॥ ६ ॥

अथसप्तमी—

आरोदसीअपृणदास्वर्महज्जातंयदेनमपसोअधारयन् ।
सोअध्वरायपरिणीयतेकविरत्योनवाजसातयेचनोहितः ॥ ७ ॥

आ । रोदसी इति । अपृणत् । आ । स्वः । महत् । जातम् ।
यत् । एनम् । अपसः । अधारयन् । सः । अध्वराय । परि ।
नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽहितः ॥ ७ ॥

रोदसी द्यावापृथिव्यौ आपृणत् आपूरयत् तथामहत्प्रभूतंस्वः अन्तरिक्षं आपृणच्च अपसःकर्मवन्तोयजमानाः जातंयत्यंएनमग्निं अधारयन् अत्योन अश्वइव कविःक्रान्तः सर्वत्रव्याप्तः चनोहितः निहितान्नः सोयमग्निः वाजसातये वाजस्य अन्नस्यकीर्तेर्वासातये लाभाय अध्वराय परिणीयते यज्ञार्थंनीयते ॥ ७ ॥

अथाष्टमी—

नमस्यतहव्यदातिंस्वध्वरंदुवस्यतदम्यंजातवेदसम् ।
रथीर्ऋतस्यबृहतोविचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ ८ ॥

नमस्यत । हव्यऽदातिम् । सुऽअध्वरम् । दुवस्यत । दम्यम् ।
जातऽवेदसम् । रथीः । ऋतस्य । बृहतः । विऽचर्षणिः । अग्निः ।
देवानाम् । अभवत् । पुरःऽहितः ॥ ८ ॥

रथीर्नेताबृहतोमहतः ऋतस्ययज्ञस्यविचर्षणिःद्रष्टायोग्निःदेवानांपुरोहितः पुरस्ताद्दृष्टव्यतयास्थापितोभवत् हव्यदातिं देवेभ्योहविषांदातारं स्वध्वरं शोभनयज्ञं दम्यं दमेभ्योगृहेभ्योहितं जातवेदसं जातप्रज्ञं तमग्निं नमस्यतपूजयत दुवस्यतपरिचरत ॥ ८ ॥

अथनवमी–

**तिस्रोयह्वस्यसमिधःपरिज्मनोग्नेरपुनन्नुशिजोअमृत्यवः ।**
**तासामेकामदधुर्मर्त्येभुजमुलोकमुद्वेउपजामिमीयतुः ॥ ९ ॥**

**तिस्रः । यह्वस्य । सम्ऽइधः । परिऽज्मनः । अग्नेः । अपुनन् । उशिजः । अमृत्यवः । तासाम् । एकाम् । अदधुः । मर्त्ये । भुजम् । ऊँ इति । लोकम् । ऊँ इति । द्वे इति । उप । जामिम् । ईयुः ॥ ९ ॥**

उशिजः कामयमानाः अमृत्यवोमृत्युरहिताः येदेवाः यह्वस्यमहतः अग्नेः परिज्मनः परितोगन्तुः समिधः समिन्धिकाः प्रकाशिकास्तिस्रः पार्थिववैद्युतसूर्यरूपास्तिस्रस्तनूः अपुनन् अशोधयन् तेदेवाः भुजंसर्वेषांपालयित्रीं तासांतनूनांमध्ये एकांपार्थिवींतनुं मर्त्येमर्त्यलोके अदधुः न्यदधुः उइतिपादपूरणः इतरेद्वेतनू जामिंलोकं आसन्नमन्तरिक्षं उपेयतुः गच्छतः अथवातिस्रःसमिधः आधारसमिधौद्वेअनूयाजसमिच्चैकेति तासांसमिधांएकां अनूयाजसमिधं मर्त्येइहलोके भोगहेतुमनूयाजपर्यन्तमदधुः धारयन्ति प्रजावाअनूयाजइति प्रजात्वेनानूयाजानांस्रष्टृत्वात् तदाश्रयत्वाच्चानूयाजसमिधः इतरेद्वेसमिधौ अन्तरिक्षेदिव्यभोगहेतू उपेयतुः उपगच्छतः त्रीन्परिधींस्तिस्रःसमिधइतिहिनिगमः ॥ ९ ॥

अथदशमी–

**विशांकविंविश्पतिंमानुषीरिषःसंसीमकृण्वन्त्स्वधितिंनतेजसे ।**
**सउद्वतोनिवतोयातिवेविषत्सगर्भमेषुभुवनेषुदीधरत् ॥१०॥१८॥**

**विशाम् । कविम् । विश्पतिम् । मानुषीः । इषः । सम् । सीम् । अकृण्वन् । स्वऽधितिम् । न । तेजसे । सः । उत्ऽवतः । निऽवतः । याति । वेविषत् । सः । गर्भम् । एषु । भुवनेषु । दीधरत् ॥१०॥ १८॥**

इषः पश्वादिलक्षणंधनमिच्छन्तयः मानुषीः मनुष्यप्रजाः विशांप्रजानां विश्पतिंप्रभुंक्विंमेधाविनं सीमिनंयममग्निं स्वधितिंन असिमिव तेजसे तैक्ष्ण्यार्थं समकृण्वन् समस्कुर्वन् सोग्निः उद्वतः उच्छ्रायवतः निवतोनीचैर्भाववतश्चप्रदेशान् वेविषत् व्याप्नुवन् यातिगच्छति सएषुभुवनेषु गर्भंगर्भत्वेनात्मानं दीधरत् अधारयत् ॥ १० ॥

॥ इतिद्वितीयस्याष्टमेष्टादशोवर्गः ॥ १८ ॥

अथैकादशी—

सजिन्वतेजठरेषुप्रजज्ञिवान्वृषाचित्रेषुनानदन्नसिंहः ।
वैश्वानरःपृथुपाजाअमर्त्योवसुरत्नादयमानोविदाशुषे ॥ ११ ॥

सः । जिन्वते । जठरेषु । प्रजज्ञिऽवान् । वृषा । चित्रेषु ।
नानदत् । न । सिंहः । वैश्वानरः । पृथुऽपाजाः । अमर्त्यः ।
वसु । रत्ना । दयमानः । वि । दाशुषे ॥ ११ ॥

प्रजज्ञिवान् जातः वृषावर्षकः सवैश्वानरः चित्रेषुनानाप्रकारेषु जठरेषु प्राणिनां भेदात् जठराणांभेदः तेषुजिन्वतेवर्धते चित्रेषुनानाविधेष्वरण्येषु नानदत् अत्यर्थं शब्दंकुर्वन् सिंहोन सिंहइव किंविधोवैश्वानरः पृथुपाजाः पृथुतेजाः अथवा पृथुवेगः अमर्त्यः मरणधर्मरहितः दाशुषेहविषांप्रदात्रे यजमानाय रत्नारमणीयानि वसुवसूनि धनानि वि विशेषेण दयमानः प्रयच्छन् ॥ ११ ॥

अथद्वादशी—

वैश्वानरःप्रत्नथानाकमारुहद्दिवस्पृष्ठंभन्दमानःसुमन्मभिः ।
सपूर्ववज्जनयञ्जन्तवेधनंसमानमज्मंपर्येतिजागृविः ॥ १२ ॥

वैश्वानरः । प्रत्नऽथा । नाकम् । आ । अरुहत् । दिवः । पृष्ठम् ।
भन्दमानः । सुमन्मऽभिः । सः । पूर्वऽवत् । जनयन् । जन्तवे ।
धनम् । समानम् । अज्मम् । परि । एति । जागृविः ॥ १२ ॥

सुमन्मभिः स्तोतृभिः भन्दमानः स्तूयमानः वैश्वानरः जातमात्रएवप्रत्नथा प्रत्नइव चिरंतनइव नाकं कंसुखं अकंदुःखं नविद्यतेअकंयस्मिन्तत् नाकं दिवः अन्तरिक्षस्यपृष्ठं उपरितनप्रदेशं स्वशोचिभिः आरुहत् आरोहति सवैश्वानरः पूर्ववत् पूर्वेभ्यऋषिभ्यइव जन्तवे स्तोत्रेयजमानाय धनंपश्वादिलक्षणं जनयन् संपादयन् जागृविःसदाप्रबुद्धः समानं सर्वेषां देवानांसाधारणं अज्मं आकाशमार्गं पर्येति सूर्यरूपेणगच्छति ॥ १२ ॥

अथत्रयोदशी–

ऋ॒तावा॑नंय॒ज्ञियं॒विप्र॑मु॒क्थ्य१॒॑मायंद॒धेमा॑त॒रिश्वा॑दि॒विक्षय॑म् ।
तंचि॒त्रया॑मं॒हरि॑केशमीमहेसु॒दी॒तिम॒ग्निंसु॑वि॒ताय॒नव्य॑से ॥ १३ ॥

ऋ॒तऽवा॑नम् । य॒ज्ञिय॑म् । विप्र॑म् । उ॒क्थ्य॑म् । आ । यम् । द॒धे । मा॒त॒रिश्वा॑ । दि॒वि । क्षय॑म् । तम् । चि॒त्रऽया॑मम् । हरि॑ऽकेशम् । ई॒म॒हे॒ । सु॒ऽदी॒तिम् । अ॒ग्निम् । सु॒वि॒ताय॑ । नव्य॑से ॥ १३ ॥

ऋतावानं बलवन्तं यज्ञियंयज्ञार्हं विप्रंमेधाविनं उक्थ्यं स्तुत्यं दिविद्युलोकेक्षयं निवसन्तं यमग्निं मातरिश्वावायुः द्युलोकादाहृत्यपृथिव्यां आदधे आहितवान् चित्रयामं नानाविधगमनं हरिकेशं पिंगलार्चिषं सुदीतिं शोभनदीप्तिंतमग्निं नव्यसेनवतराय सुविताय सुष्ठुप्राप्तव्यायधनाय तदर्थंईमहेयाचामहे ॥ १३ ॥

अथचतुर्दशी–

शुचिं॒नयाम॑न्नि॒षि॒रंस्व॒र्दृशं॒के॒तुंदि॒वोरो॑च॒नस्था॑मु॒ष॒र्बुध॑म् ।
अ॒ग्निंमू॒र्धानं॑दि॒वोअप्र॑तिष्कु॒तं॒तमी॑महे॒नम॑सावा॒जिनं॑बृ॒हत् ॥ १४ ॥

शुचि॑म् । न । याम॑न् । इ॒षि॒रम् । स्वः॒ऽदृश॑म् । के॒तुम् । दि॒वः । रो॒च॒न॒ऽस्थाम् । उ॒षः॒ऽबुध॑म् । अ॒ग्निम् । मू॒र्धान॑म् । दि॒वः । अप्र॑तिऽस्कुतम् । तम् । ई॒म॒हे॒ । नम॑सा । वा॒जिन॑म् । बृ॒हत् ॥ १४ ॥

नेतिसंप्रत्यर्थे शुचिंदीप्तं यामन्यामनियज्ञे इषिरंएषणीयं स्वर्दृशंसर्वदृशंसर्वपदार्थविज्ञानयुक्तं दिवः द्युलोकस्यकेतुं प्रज्ञापकं रोचनस्थांरोचनस्थं रोचनःसूर्यः तस्मिन् तिष्ठन्तं उषर्बुधं

अग्निहोत्रिकरूपेण उषसिप्रबुध्यमानं दिवःस्वर्गस्यमूर्धानंप्रधानं अप्रतिष्कुतंअप्रतिहतशब्दं वाजिनमन्नवन्तं बृहद् महान्तं तमग्निं नमसास्तोत्रेण ईमहेयाचामहे ॥ १४ ॥

अथपञ्चदशी—

मन्द्रंहोतारंशुचिमद्वयाविनंदमूनसमुक्थ्यंविश्वचर्षणिम् ।
रथंनचित्रंवपुषायदर्शतंमनुर्हितंसदमिद्रायईमहे ॥ १५ ॥ १९ ॥

मन्द्रम् । होतारम् । शुचिम् । अद्वयाविनम् । दमूनसम् । उक्थ्यम् ।
विश्वऽचर्षणिम् । रथम् । न । चित्रम् । वपुषाय । दर्शतम् ।
मनुःऽहितम् । सदम् । इत् । रायः । ईमहे ॥ १५ ॥ १९ ॥

मन्द्रं स्तुत्यंहोतारंदेवानामाह्वातारं शुचिंसर्वदाशुद्धं अद्वयाविनंद्वयहीनं अकुटिलं दमूनसंदानमनसं उक्थ्यंश्रेष्ठं विश्वचर्षणिंविश्वस्यद्रष्टारं चित्रं नानाविधवर्णं रथंन रथमिव वपुषाय रूपार्थं दर्शतंदर्शनीयं सदमित् सदैवमनुर्हितं सर्वेभ्योमनुष्येभ्योहितं तमग्निंरायोधनानिईमहेयाचामहे अत्रयाच्ञार्थत्वादस्यद्विकर्मकत्वम् ॥ १५ ॥

॥ इतिद्वितीयस्याष्टमेएकोनविंशोवर्गः ॥ १९ ॥

वैश्वानरायेत्येकादशर्चंतृतीयंसूक्तं वैश्वामित्रं अत्रेयमनुक्रमणिका—वैश्वानरायैकादशेति । पूर्वसूक्तेवैश्वानरीयंतुजागतंत्वित्युक्तत्वादस्यापिसूक्तस्यजगतीछन्दः वैश्वानरोग्निर्देवता अस्य सूक्तस्यअग्निष्टोमेआग्निमारुतशस्त्रेविनियोगः सूत्र्यतेहि—वैश्वानरायपृथुपाजसेशंनःकरत्यर्वतइति ।

तत्रप्रथमा—

वैश्वानरायपृथुपाजसेविपोरत्नाविधन्तधरुणेषुगातवे ।
अग्निर्हिदेवाँअमृतोदुवस्यत्यथाधर्माणिसनतानदूदुषत् ॥ १ ॥

वैश्वानराय । पृथुऽपाजसे । विपः । रत्ना । विधन्त । धरुणेषु ।
गातवे । अग्निः । हि । देवान् । अमृतः । दुवस्यति । अथ । धर्माणि ।
सनता । न । दूदुषत् ॥ १ ॥

विपोमेधाविनः स्तोतारः पृथुपाजसे बहुबलायबहुन्नायवापाजः शब्दस्यबलान्ननाम्नोः पाठात् वैश्वानरायाग्नये धरुणेषुधर्मेषुयज्ञेषु रत्ना रमणीयानिस्तोत्राणि गातवे सन्मार्गलाभाय विधन्त परिचरन्तिकुर्वन्ति अमृतः मरणरहितोग्निः देवानदुवस्यति हविषांप्रदानेनपरिचरति हिःमसिद्धौ अथअतःकारणात् कोपिसनता सनातनानि धर्माणि यज्ञान् नदूदुषत् न दूषयति ॥ १ ॥

अथद्वितीया–

अन्तर्दूतोरोदसीदस्मईयतेहोतानिषत्तोमनुषःपुरोहितः ।
क्षयंबृहन्तंपरिभूषतिद्युभिर्देवेभिरग्निरिषितोधियावसुः ॥ २ ॥

अन्तः । दूतः । रोदसी इति । दस्मः । ईयते । होता । निऽसत्तः । मनुषः । पुरःऽहितः । क्षयम् । बृहन्तम् । परि । भूषति । द्युऽभिः । देवेभिः । अग्निः । इषितः । धियाऽवसुः ॥ २ ॥

दस्मोदर्शनीयोहोताग्निः दूतः देवानांदूतःसन् रोदसीरोदस्योर्द्यावापृथिव्योः अन्तर्मध्ये ईयतेगच्छति मनुषः मनोर्जातस्य मनुष्यस्यपुरोहितः आहवनीयादिरूपेणपुरतःस्थापितः निषत्तोनिषण्णःसन् अग्निर्द्युभिःदीप्तिभिः बृहन्तं महान्तं क्षयं यज्ञगृहं परिभूषति अलंकुरुते देवेभिःदेवैः इषितः प्रेषितोधियावसुः प्रज्ञयाव्याप्तः एतेद्वे अग्निविशेषणे ॥ २ ॥

अथतृतीया–

केतुंयज्ञानांविदथस्यसाधनंविप्रासोअग्निंमहयन्तचित्तिभिः ।
अपांसियस्मिन्नधिसन्दधुर्गिरस्तस्मिन्त्सुम्नानियजमानआचके ॥३॥

केतुम् । यज्ञानाम् । विदथस्य । साधनम् । विप्रासः । अग्निम् । महयन्त । चित्तिऽभिः । अपांसि । यस्मिन् । अधि । सम्ऽदधुः । गिरः । तस्मिन् । सुम्नानि । यजमानः । आ । चके ॥ ३ ॥

यज्ञानांकेतुंप्रज्ञापकंविदथस्ययज्ञस्यगृहस्यवासाधनं प्राप्तिसाधनं असाधारणकारणं सन्तमग्निं विप्रासोविप्राः चित्तिभिः स्वकर्मभिः महयन्त पूजयन्ति किंच गिरः स्तोतारः यस्मि-

अग्नौअपांसिस्वानुष्ठेयानिकर्माणिअधिसंदधुः संदधते यजमानः तस्मिन्नग्नौ सुम्नानिसुखानि प्राप्तुं आचके कामयते ॥ ३ ॥

अथचतुर्थी–

पितायज्ञानामसुरोविपश्चितांविमानमग्निर्वयुनंचवाघताम्।
आविवेशरोदसीभूरिवर्पसापुरुप्रियोभन्दतेधामभिःकविः ॥ ४ ॥

पिता। यज्ञानाम्। असुरः। विपःऽचिताम्। विऽमानम्। अग्निः।
वयुनम्। च। वाघताम्। आ। विवेश। रोदसी इति।
भूरिऽवर्पसा। पुरुऽप्रियः। भन्दते। धामऽभिः। कविः ॥ ४ ॥

यज्ञानां पितापालयिता विपश्चितां विदुषांस्तोतॄणां असुरोबलप्रदः वाघतां ऋत्विजां वयुनं ज्ञानसाधनं विमानं विमीयतेनेनफलमितिविमानंयज्ञादिकर्मसाधनंचसोऽग्निः भूरिवर्पसा पार्थिववैद्युतादिबहुविधरूपेण रोदसीद्यावापृथिव्यौ आविवेश प्रविशति पुरुप्रियः मनुष्येषु अधिकं प्रियः अथवापुरूणां श्रेष्ठानां प्रियः धामभिस्तेजोभिर्युक्तः कविरग्निर्भन्दते यजमानेन स्तूयते ॥ ४ ॥

अथपञ्चमी–

चन्द्रमग्निंचन्द्ररथंहरिव्रतंवैश्वानरमप्सुषदंस्वर्विदम्।
विगाहंतूर्णितविषीभिरावृतंभूर्णिदेवासइहसुश्रियंदधुः ॥५॥२०॥

चन्द्रम्। अग्निम्। चन्द्रऽरथम्। हरिऽव्रतम्। वैश्वानरम्।
अप्सुऽसदम्। स्वःऽविदम्। विऽगाहम्। तूर्णिम्। तविषीभिः।
आऽवृतम्। भूर्णिम्। देवासः। इह। सुऽश्रियम्। दधुः ॥ ५ ॥ २० ॥

देवासोदेवाः चन्द्रमाह्लादकरं चन्द्ररथं हिरण्मयरथं चन्द्रआह्लादकोरथोयस्येति वा तंहरिव्रतं पिङ्गलवर्णं हरित्त्वचंवा हरित्त्वचमितिशाखान्तरं अप्सुषदं अप्सुसीदन्तं स्वर्विदं सर्वज्ञं विगाहं विगाहमानं सर्वत्रव्याप्तं तूर्णिं क्षिप्रगामिनं शत्रूणां हिंसितारंवा तविषीभिः बलैरावृतं भूर्णिं भर्तारं सुश्रियं शोभनदीप्तिं वैश्वानरं अग्निं इह इहलोके दधुः आदधुः ॥ ५ ॥

॥ इतिद्वितीयस्याष्टमेविंशोवर्गः ॥ २० ॥

अथषष्ठी–

अ॒ग्निर्दे॒वेभि॒र्मनु॑षश्च ज॒न्तुभि॑स्तन्वा॒नो य॒ज्ञं पु॑रु॒पेश॑सं धि॒या।
र॒थीर॒न्तरी॑यते॒ साध॑दिष्टिभिर्जी॒रो दमू॑ना अभिश॒स्ति॒चात॑नः ॥ ६ ॥

अ॒ग्नि। दे॒वेभिः॑। मनु॑षः। च॒। ज॒न्तुऽभिः॑। त॒न्वा॒नः। य॒ज्ञम्।
पु॒रु॒ऽपेश॑सम्। धि॒या। र॒थीः। अ॒न्तः। ई॒य॒ते॒। साध॑दिष्टिऽभिः।
जी॒रः। दमू॑नाः। अ॒भि॒श॒स्ति॒ऽचात॑नः ॥ ६ ॥

देवेभिःदेवैः साधदिष्टिभिः साधितयज्ञैर्जन्तुभिः ऋत्विग्भिश्च धियाकर्मणा मनुषोयजमानस्य पुरुपेशसं बहुरूपं पेशइतिरूपनाम पुरोडाशपशुसोमहविर्भेदैः एकाहाहीनसत्रात्मकभेदैश्च नानाविधरूपं यज्ञं तन्वानः कुर्वन्रथीः सर्वस्यलोकस्यनेता जीरः क्षिप्रकारी दमूनाः दान्तमनाः दानमनावा अभिशस्तिचातनः अभिशस्तीनामरातीनां यज्ञविघ्नकारिणां रक्षसां चातयितानाशयिताग्निः अन्तः द्यावापृथिव्योर्मध्ये ईयतेगच्छति ॥ ६ ॥

अथसप्तमी–

अग्ने॒ जर॑स्व स्वप॒त्य आयु॑न्यू॒र्जा पि॑न्वस्व॒ समिषो॑ दिदीहि नः।
वयां॑सि जिन्व बृह॒तश्च॑ जागृव उ॒शिग्दे॒वाना॒मसि॑ सु॒क्रतु॑र्वि॒पाम् ॥ ७ ॥

अग्ने॑। जर॑स्व। सु॒ऽअ॒प॒त्ये। आयु॑नि। ऊ॒र्जा। पि॒न्व॒स्व॒। सम्।
इषः॑। दि॒दी॒हि॒। नः॒। वयां॑सि। जि॒न्व॒। बृ॒ह॒तः। च॒। जा॒गृ॒वे॒।
उ॒शिक्। दे॒वाना॑म्। असि॑। सु॒ऽक्रतुः॑। वि॒पाम् ॥ ७ ॥

हेअग्ने स्वपत्येसुपुत्रे आयुनि आयुषि निमित्तसप्तम्येषा आयुषिनिमित्ते जरस्व देवान्स्तुहि होतारमधिष्ठाय ऊर्जा रसेनअन्नेनवा पिन्वस्वदेवान् प्रीणय नोस्माकं इषःसस्यार्थं वृष्टीः संदिदीहि संदीपय वयांसिअन्नानिच वयः क्षग्रेत्यन्ननामसुपाठात् जिन्वदेहि हेजागृवेसर्वदाजागरणशील बृहतःमहतोयजमानस्य जिन्वेतिसंबन्धः सुक्रतुःशोभनकर्माशोभनयज्ञोवात्वं विपांमेधाविनां देवानां उशिक् कान्तोसि ॥ ७ ॥

अथाष्टमी—

विश्पतिंयह्वमतिथिंनरःसदायन्तारंधीनामुशिजंचवाघताम् ।
अध्वराणांचेतनंजातवेदसंप्रशंसन्तिनमसाजूतिभिर्वृधे ॥ ८ ॥

विश्पतिम् । यह्वम् । अतिथिम् । नरः । सदा । यन्तारम् । धीनाम् ।
उशिजम् । च । वाघताम् । अध्वराणाम् । चेतनम् । जातऽवेदसम् ।
प्र । शंसन्ति । नमसा । जूतिऽभिः । वृधे ॥ ८ ॥

नरोनेतारः स्तोतारोवा विश्पतिं विशांमनुष्याणांपतिंविश्वस्यपतिमितिवायह्वंमहान्तं अतिथिंसर्वस्यातिथिभूतं धीनांबुद्धीनांकर्मणांवा यन्तारंनियन्तारं वाघतांचऋत्विजांच उशिजं कान्तंमनोज्ञं अध्वराणांयागानांचेतनं प्रज्ञापकं जूतिभिर्वेगैर्युक्तं जातवेदसमग्निं वृधेवृद्धयेसमृद्धये नमसानमस्कारेणस्तुतिभिश्च सदासर्वकालं प्रशंसन्ति प्रशंसांकुर्वन्ति ॥ ८ ॥

अथनवमी—

विभावादेवःसुरणःपरिक्षितीरग्निर्बभूवशवसासुमद्रथः ।
तस्यव्रतानिभूरिपोषिणोवयमुपभूषेमदमआसुवृक्तिभिः ॥ ९ ॥

विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव ।
शवसा । सुमत्ऽरथः । तस्य । व्रतानि । भूरिऽपोषिणः । वयम् ।
उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥ ९ ॥

विभावादीप्तिमान् देवः स्तूयमानः सुरणः अत्रवर्णलोपश्छान्दसः शोभनंरमयतीति सुरमणः सुमद्रथः शोभनरथः अग्निः शवसाबलेन क्षितीः सर्वाः प्रजाः परिबभूव परितोगृह्णाति अत्रभवतेरुपसर्गवशात्परिग्रहार्थत्वं भूरिपोषिणः बहूनांपोषयितुः पालयितुः दमे यज्ञगृहे दमइतिगृहनामसुपाठात् निवसतः तस्याग्नेर्व्रतानिकर्माणि वयंसुवृक्तिभिः स्तोत्रैः आसर्वतःउपभूषेम उपभूषयामः प्रकाशयामः ॥ ९ ॥

अथदशमी—

वैश्वानरतवधामान्याचकेयेभिःस्वर्विदभवोविचक्षण ।
जातआपृणोभुवनानिरोदसीअग्नेताविश्वापरिभूरसित्मना ॥ १० ॥

वैश्वानर । तव । धामानि । आ । चके । येभिः । स्वःऽवित् ।
अभवः । विऽचक्षण । जातः । आ । अपृणः । भुवनानि । रोदसी इति ।
अग्ने । ता । विश्वा । परिऽभूः । असि । त्मना ॥ १० ॥

हेवैश्वानर तवधामानित्वत्संबन्धीनितेजांसि आचके अभिष्टौमि हेविचक्षण प्राज्ञ त्वं येभिः यैस्तेजोभिः स्वर्वित् सर्ववित् सर्वज्ञः अभवः भवसि जातः जातमात्रस्त्वं भुवनानि भूतजातानि रोदसीद्यावापृथिव्यौ आपृणः आपूरयः हेअग्ने विश्वाविश्वानिसर्वाणि ता तानि भुवनानिभूतजातानि त्मनाआत्मना परिभूरसि परिग्रहीतासि ॥ १० ॥

अथैकादशी–

वैश्वानरस्यदंसनाभ्योबृहदरिणादेकःस्वपस्ययाकविः ।
उभापितरामहयन्नजायताग्निर्द्यावापृथिवीभूरिरेतसा॥११॥२१॥

वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअपस्यया । कविः । उभा । पितरा । महयन् । अजायत । अग्निः । द्यावापृथिवी इति । भूरिऽरेतसा ॥ ११ ॥ २१ ॥

वैश्वानरस्याग्नेः दंसनाभ्यः तोषकारीभ्यः क्रियाभ्यः बृहन्महद्धनंभवतीतियत् तद्वितथं यतःकारणात् एकोमुख्यः कविरग्निः स्वपस्यया शोभनयज्ञादिकर्मेच्छयायजमानादिभ्योधनमरिणात् ददातिसोयमग्निः भूरिरेतसा बहुरेतस्कौ उभाउभौ पितरापितरौ मातापितरौद्यावापृथिवी द्यावापृथिव्यौ महयन् पूजयन् अजायत ॥ ११ ॥

॥ इतिद्वितीयस्याष्टमेएकविंशोवर्गः ॥ २१ ॥

समित्समिदित्येकादशर्चंचतुर्थंसूक्तं वैश्वामित्रं त्रैष्टुभं अत्रानुक्रमणिका समित्समिदाप्रियइति इध्मादिस्वाहाकृत्यन्ताःपूर्वोक्ताःप्रत्यृचंदेवताः पशौवैश्वामित्राणांआप्रीसूक्तं दर्शपूर्णमासयोः पत्नीसंयाजेषुत्वष्टुर्याज्या तन्नइत्येषा सूत्रितंच–इहत्वष्टारमग्रियंतन्नस्तुरीपमधपोषयित्न्विति । त्वाष्ट्रेपशौ पुरोडाशस्यानुवाक्या सूत्रितंच–तन्नस्तुरीपमधपोषयित्नुदेवस्त्वष्टासविताविश्वरूपइति ।

तत्रप्रथमा—

समित्समित्सुमनाबोध्यस्मेशुचाशुचासुमतिंरासिवस्वः ।
आदेवदेवान्यजथायवक्षिसखासखीन्त्सुमनायक्ष्यग्ने ॥ १ ॥

समित्ऽसमित् । सुऽमनाः । बोधि । अस्मे इति । शुचाऽशुचा । सुऽमतिम् । रासि । वस्वः । आ । देव । देवान् । यजथाय । वक्षि । सखा । सखीन् । सुऽमनाः । यक्षि । अग्ने ॥ १ ॥

समित्समित् अत्यर्थंसमिद्धस्त्वं सुमनाः बोधिबुध्यस्व शुचाशुचा अत्यर्थं प्रसर्पकेण ज्योतिषायुक्तः त्वं वस्वोवसुनोधनस्यतद्विषयां सुमतिं शोभनांबुद्धिं अस्मेअस्मभ्यं रासिदेहि हे देव द्योतमान देवान् यजनीयान् यजथाययज्ञाय तदर्थं आवक्षिआवहसि हेअग्नेसखादेवानां सखात्वं सुमनाःसन् सखीन् देवान् यक्षियजस्व ॥ १ ॥

अथद्वितीया—

यंदेवासस्त्रिरहन्नायजन्तेदिवेदिवेवरुणोमित्रोअग्निः ।
सेमंयज्ञंमधुमन्तंकृधीनस्तनूनपाद्घृतयोनिंविधन्तम् ॥ २ ॥

यम् । देवासः । त्रिः । अहन् । आऽयजन्ते । दिवेऽदिवे । वरुणः । मित्रः । अग्निः । सः । इमम् । यज्ञम् । मधुऽमन्तम् । कृधि । नः । तनूऽनपात् । घृतऽयोनिम् । विधन्तम् ॥ २ ॥

वरुणःमित्रःअग्निः एतेत्रयोदेवासोदेवाः यमग्निंदिवेदिवेप्रतिदिवसं अहन्अहनित्रिः प्रातर्मध्याह्नसायंतनेषुसवनेषु त्रिवारं आयजन्ते हेतनूनपात् तनूनांशरीराणां नपातयितः सत्वंघृतयोनिं घृस्योदकस्यकारणं विधन्तंविधीयमानंक्रियमाणं नोस्मदीयमिमंयज्ञं मधुमन्तं मध्वित्युदकनाम वृष्ट्यादिफलयुक्तंकृधिकुरु ॥ २ ॥

अथतृतीया—

प्रदीधितिर्विश्ववाराजिगातिहोतारमिळःप्रथमंयजध्यै ।
अच्छानमोभिर्वृषभंवन्दध्यैसदेवान्यक्षदिषितोयजीयान् ॥ ३ ॥

प्र । दीधितिः । विश्वऽवारा । जिगाति । होतारम् । इळः ।
प्रथमम् । यजध्यै अच्छ । नमःऽभिः । वृषभम् । वन्दध्यै ।
सः । देवान् । यक्षत् । इषितः । यजीयान् ॥ ३ ॥

विश्ववाराविश्वैर्जनैर्वरणीया दीधितिः स्तुतिः दीप्तिर्वा होतारं देवानामाह्वातारमग्निंप्रजिगाति जिगातु प्रकर्षेणगच्छतु प्रथमंमुख्यंअच्छआभिमुख्येन वृषभंसंपदांवर्षितारंवन्दध्यैवन्दितुंयोग्यमितिशेषः अग्निंनमोभिः नमस्कारैः सह इळः इषः हवीरूपाण्यन्नानियजध्यै यष्टुंप्रीणयितुंप्रजिगातु प्रकर्षेणगच्छन्तु इषितः अस्माभिःप्रेरितः यजीयान्यष्टृतमः सोग्निर्देवान् यक्षत्यजतु ॥ ३ ॥

अथचतुर्थी–

ऊर्ध्वोवांगातुरध्वरेअंकार्यूर्ध्वाशोचींषिप्रस्थितारजांसि ।
दिवोवानाभान्यसादिहोतास्तृणीमहिदेवव्यचाविबर्हिः ॥ ४ ॥

ऊर्ध्वः । वाम् । गातुः । अध्वरे । अकारि । ऊर्ध्वा । शोचींषि ।
प्रऽस्थिता । रजांसि । दिवः । वा । नाभा । नि । असादि ।
होता । स्तृणीमहि । देवऽव्यचाः । वि । बर्हिः ॥ ४ ॥

वांयुवयोः अग्निश्चबर्हिश्चउभौवामित्युच्येते समिदादिभिः सहितस्यैवाग्नेर्देवतात्वात् ऊर्ध्वः उन्नतः गातुर्यज्ञमार्गः अध्वरेयज्ञे अकारि आश्रयःक्रियते शोचींषिअर्चिष्मन्तिरजांसिहवींषिऊर्ध्वाऊर्ध्वंप्रस्थिता प्रस्थितानिगतानिसन्तिहोताग्निर्दिवः दीप्यमानस्ययागगृहस्य नाभा नाभौ मध्यप्रदेशेन्यसादिनिषीदति देवव्यचाः देवैर्व्याप्तंबर्हिश्च चार्थेवाशब्दः विस्तृणीमहि विशेषेणस्तृणीमः ॥ ४ ॥

अथपञ्चमी–

सप्तहोत्राणिमनसावृणानाइन्वन्तोविश्वंप्रतियन्नृतेन ।
नृपेशसोविदथेषुप्रजाताअभीरेमंयज्ञंविचरन्तपूर्वीः ॥ ५ ॥२२॥

सप्त । होत्राणि । मनसा । वृणानाः । इन्वन्तः । विश्वम् । प्रति ।
यन् । ऋतेन । नृऽपेशसः । विदथेषु । प्र । जाताः । अभि ।
इमम् । यज्ञम् । वि । चरन्त । पूर्वीः ॥ ५ ॥ २२ ॥

मनसावृणानाः प्रार्थ्यमानाः ऋतेनउदकेन विश्वंइन्वन्तः प्रीणयन्तः देवाः सप्तहोत्राणि होतॄणांवषट्कर्तॄणांकर्माणिप्रतियन्प्रतिगच्छन्ति अतःपरंद्वारांस्तुतिः नृपेशसः नररूपाः विदथेषुयागेषुजाताः उत्पन्नाः पूर्वीर्बह्व्यः विग्रहवत्योयज्ञद्वाराभिमानिन्योदेवताः इममस्मदीयंयज्ञं विचरन्त विचरन्तु ॥ ५ ॥

॥ इतिद्वितीयस्याष्टमेद्वाविंशोवर्गः ॥ २२ ॥

अथषष्ठी—

आभन्दमानेउषसाउपाकेउतस्मयेतेतन्वा३विरूपे ।
यथानोमित्रोवरुणोजुजोषदिन्द्रोमरुत्वाँउतवामहोभिः ॥ ६ ॥

आ । भन्दमाने इति । उषसौ । उपाके इति । उत । स्मयेते इति ।
तन्वा । विरूपे इति विऽरूपे । यथा । नः । मित्रः । वरुणः ।
जुजोषत् । इन्द्रः । मरुत्वान् । उत । वा । महःऽभिः ॥ ६ ॥

भन्दमाने स्तूयमाने उपाकेपरस्परं संगते उषसानक्ता अन्योन्यापेक्षयाद्विवचनं नक्तोषसौरात्र्यहनी आ आगच्छतां उतअपिच विरूपेपृथग्रूपे तन्वाप्रकाशरूपेणशरीरेण स्मयेते प्रकाशेते मित्रोवरुणः उतवाअपिच इन्द्रः मरुत्वांश्च नोस्मान् यथाजुजोषत् यथासेवेत तथा महोभिस्तेजोभिर्युक्तेन्द्र मेद्यावापृथिव्यौकुरुताम् ॥ ६ ॥

अथसप्तमी—

दैव्याहोतारापथमान्यृञ्जेसप्तपृक्षासःस्वधयामदन्ति ।
ऋतंशंसन्तऋतमित्तआहुरनुव्रतंव्रतपादीध्यानाः ॥ ७ ॥

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया ।
मदन्ति । ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु ।
व्रतम् । व्रतऽपाः । दीध्यानाः ॥ ७ ॥

दैव्यादिव्यौ प्रथमाप्रथमौमुख्यौ होतारा आह्वातारौ अग्नी न्यूंजे प्रसाधयामि ऋतमुदकंशंसन्तः आशंसमानाः समपृक्षासःपृक्षमन्नं तद्वन्तऋत्विजः तमग्निंस्वधयासोमेनहविषामदन्ति मादयन्ति व्रतपाः व्रतानांकर्मणांरक्षितारः दीध्यानादीप्यमानाः अथवास्वकर्मभिरग्निंदीपयन्तः ऋत्विजः अनुव्रतं व्रतेषुऋतमित अग्निमेवमाहुः अग्निमेवऋतभूतमाहुरित्यर्थः एवकारार्थे इच्छब्दः ॥ ७ ॥

अथाष्टमी—

आभारतीभारतीभिःसजोषाइळादेवैर्मनुष्येभिरग्निः ।
सरस्वतीसारस्वतेभिरर्वाक्तिस्रोदेवीर्बर्हिरेदंसदन्तु ॥ ८ ॥

आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः । सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥ ८ ॥

भारतीभिः भरतस्य सूर्यस्यसंबन्धिनीभिः अद्भिः सजोषाःसंगताभारतीवाक् आगच्छतु देवैर्मनुष्येभिः मनुष्यैश्चसंगताःसत्यः इळाचभूमिश्चआगच्छतु अग्निश्चसारस्वतेभिः सरस्वतिसंबंधिभिः मध्यमस्थानैःसहसरस्वतीमाध्यमिकावाक्च आगच्छतु तिस्रोदेवीः देव्यः वागिळाभारत्यः आगच्छन्तु अर्वागाभिमुख्यं इदंएतत् बर्हिः आसन्दतु आसीदन्तु ॥८॥

अथनवमी—

तन्नस्तुरीपमधपोषयित्नुदेवत्वष्टर्विरराणस्यस्व ।
यतोवीरःकर्मण्यःसुदक्षोयुक्तग्रावाजायतेदेवकामः ॥ ९ ॥

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व । यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥

हेदेवत्वष्टः सृष्टिकर्तः विरराणः विशेषेणरममाणःत्वंअधअनन्तरं नोस्मान् तुरीयंतारकं पोषयित्नुपोषकंतत्प्रसिद्धंरेतः विस्यस्वमोचय यतोविमोचनाद्वीरः सत्ववान् कर्मण्यः कर्म-

सुकुशलः सुदक्षः सुबलः युक्तग्रावा अभिषवार्थग्रावयुक्तः सोमसुदित्यर्थः देवकामः देवान् कामयमानः पुत्रोजायते जायेत ॥ ९ ॥

अथदशमी–

वन॑स्पते॒ऽव॑सृ॒जोप॑दे॒वान॒ग्निर्ह॒विः श॑मि॒तासू॑दयाति ।
सेदु॒होता॑स॒त्यत॑रोयजाति॒यथा॑दे॒वानां॒जनि॑मानि॒वेद॑ ॥ १० ॥

वन॑स्पते । अव॑ । सृ॒ज॒ । उप॑ । दे॒वान् । अ॒ग्निः । ह॒विः । श॒मि॒ता । सू॒द॒या॒ति॒ । सः । इत् । ऊँ इति॑ । होता॑ । स॒त्यऽत॑रः । य॒जा॒ति॒ । यथा॑ । दे॒वाना॑म् । जनि॑मानि । वेद॑ ॥ १० ॥

हेवनस्पते देवानुपावसृज समीपेकुरु शमितापशोःसंस्कर्ता अग्निः वनस्पतिश्चहविः सूदयाति देवान् प्रतिप्रेरयतु सत्यतरः अत्यर्थंसत्यः सत्यतरः सत्यस्वरूपः सइत् सएवहोतायजातियजतु यथा यतःकारणात् सएवाग्निः देवानां जनिमानिजन्मानि वेदवेत्ति अतः सएव यजत्वित्यर्थः उःपूरणः ॥ १० ॥

अथैकादशी–

आया॑ह्यग्नेसमिधा॒नो अ॒र्वाङिन्द्रे॑णदे॒वैः स॒रथं॑तु॒रेभिः॑ ।
ब॒र्हिर्न॒आस्ता॒मदि॑तिः सुपु॒त्रास्वाहा॑दे॒वाअ॒मृता॑मादयन्ताम् ॥ ११ ॥ २३ ॥

आ । या॒हि॒ । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नः । अ॒र्वाङ् । इन्द्रे॑ण । दे॒वैः । स॒ऽरथ॑म् । तु॒रेभिः॑ । ब॒र्हिः । नः॒ । आस्ता॑म् । अदि॑तिः । सु॒ऽपु॒त्रा । स्वाहा॑ । दे॒वाः । अ॒मृताः॑ । मा॒द॒य॒न्ता॒म् ॥ ११ ॥ २३ ॥

हेअग्ने अर्वाक् अस्मदभिमुखंसमिधानः समिध्यमानः ज्वालारूपेणदीप्यमानः त्वंआयाहिदेवतारूपेणागच्छ कथमितिउच्यते–नोस्माकंयज्ञंइन्द्रेणदेवैश्चतुरेभिः त्वरमाणैःदेवैः सरथंसमानरथं यथातथा आयाहि किंच सुपुत्राअदितिरपिनोबर्हिः आस्तां अध्यास्तां स्वाहा स्वाहाकारेणयुक्ताअमृताः नित्यादेवाः मादयन्तां तृप्यन्तु ॥ ११ ॥

॥ इतिद्वितीयस्याष्टमेत्रयोविंशोवर्गः ॥ २३ ॥

प्रत्यग्निरुषसइत्येकादशर्चंपञ्चमंसूक्तं वैश्वामित्रंत्रैष्टुभमाग्नेयं अत्रानुक्रमणिका—प्रत्यग्निरिति। प्रातरनुवाकाश्विनशस्त्रयोरिदमादिसूक्तत्रयस्यविनियोगः सूत्रितंच—प्रत्यग्निरुषसइतित्रीणीति इळामग्नइतिअस्यउक्तोविनियोगः।

तत्रप्रथमा—

प्रत्य॒ग्निरु॒षस॒श्चेकि॑ता॒नोबो॑धि॒विप्रः॑पद॒वीःक॑वी॒नाम्।
पृ॒थु॒पाजा॑देव॒यद्भिः॒समि॑द्धो॒पद्वारा॒तम॑सो॒वह्नि॑रावः॥१॥

प्रति॑। अ॒ग्निः। उ॒षसः॑। चेकि॑तानः। अबो॑धि। विप्रः॑। प॒द॒ऽवीः। क॒वी॒नाम्। पृ॒थु॒ऽपाजाः॑। दे॒व॒यत्ऽभिः॑। सम्ऽइ॑द्धः। अप॑। द्वारा॑। तम॑सा। वह्निः॑। आव॒रित्या॑वः॥१॥

उषसः चेकितानोजानन्विप्रः मेधावीकवीनां क्रान्तदर्शां पदवीः मार्गान्गच्छयोग्निः प्रत्यबोधिप्रतिबुध्यते पृथुपाजाः पृथुतेजाः देवयद्भिर्देवकामैः समिद्धः सम्यक्दीप्तसवह्निः तमसः अज्ञानस्यद्वारा आगमनद्वाराणिअपावः अपावृणोतु॥१॥

अथद्वितीया—

प्रेद्व॒ग्निर्वा॑वृधे॒स्तोमे॑भिर्गी॒र्भिःस्तो॑तॄ॒णांन॑म॒स्य॑उ॒क्थैः।
पू॒र्वीरृ॒तस्य॑सं॒दृश॑श्चका॒नःसंदू॒तोअ॑द्यौदु॒षसो॑वि॒रोके॥२॥

प्र। इत्। ऊँ इति॑। अ॒ग्निः। व॒वृ॒धे॒। स्तोमे॑भिः। गीः॒ऽभिः। स्तो॒तॄ॒णाम्। न॒म॒स्यः॑। उ॒क्थैः। पू॒र्वीः। ऋ॒तस्य॑। स॒म्ऽदृशः॑। च॒का॒नः। सम्। दू॒तः। अ॒द्यौ॒त्। उ॒षसः॑। वि॒ऽरोके॥२॥

नमस्यः पूज्योयोग्निः स्तोतॄणांस्तोमेभिः स्तोत्रैर्गीर्भिर्वाग्भिरुक्थैःशस्त्रैश्चप्रववृधेवृद्धिंप्राप्नोति दूतःदेवानांदूतः सःपूर्वीः बह्वीः ऋतस्यादित्यस्यसंदृशः दीप्तीः चकानः कामयमानः उषसः विरोकेविरोचनेप्रातःकालेसमद्यौत सम्यक्द्योतते इत्उपूरणौ॥२॥

अथतृतीया—

अधा॑य्य॒ग्निर्मानु॑षीषु वि॒क्ष्व१॒॑पांगर्भो॑मि॒त्रऋ॒तेन॒साध॑न्।
आहर्य॒तोय॑ज॒तःसान्व॑स्था॒दभू॑दु॒विप्रो॒हव्यो॑म॒ती॒नाम्॥३॥

अधायि । अग्निः । मानुषीषु । विक्षु । अपाम् । गर्भः । मित्रः ।
ऋतेन । साधन् । आ । हर्यतः । यजतः । सानु । अस्थात् । अभूत् ।
ऊँ इति । विप्रः । हव्यः । मतीनाम् ॥ ३ ॥

मित्रः यजमानानांमित्रभूतः ऋतेनसत्येनसाधन्कामान्साधयन् अपांगर्भोग्निः मानुषीषुमनोःसंबन्धिनीषुविक्षुप्रजासु अधायिदेवैराहितः किंच हर्यतः स्पृहणीयःयजतोयष्टव्यः सः सानुउच्छ्रितंधिष्ण्यं उत्तरवेद्याख्यं आस्थात् अध्यतिष्ठत् विप्रःप्राज्ञःअग्निः मतीनांमातॄणांस्तोतॄणांहव्यःस्तुत्यः अभूत् उःपूरणः ॥ ३ ॥

अथचतुर्थी—

मित्रोअग्निर्भवतियत्समिद्धोमित्रोहोतावरुणोजातवेदाः ।
मित्रोअध्वर्युरिषिरोदमूनामित्रःसिन्धूनामुतपर्वतानाम् ॥ ४॥

मित्रः । अग्निः । भवति । यत् । सम्ऽइद्धः । मित्रः । होता । वरुणः ।
जातऽवेदाः । मित्रः । अध्वर्युः । इषिरः । दमूनाः । मित्रः ।
सिन्धूनाम् । उत । पर्वतानाम् ॥ ४ ॥

इयमृक् अग्निंसर्वात्मकत्वेनस्तौति यद्यदासमिद्धोग्निः तदामित्रोभवतिसूर्योभवति मित्रएवसन् होताभवति वरुणोभवति जातवेदाःजातप्रज्ञः समित्रः अध्वर्युर्भवति दमूनाःदानमनाः दान्तमनावासएवइषिरः प्रेरकोवायुर्भवति उतअपिच सिन्धूनांनदीनां पर्वतानांचमित्रः सहायोभवति ॥ ४ ॥

अथपञ्चमी—

पातिप्रियंरिपोअग्रंपदंवेःपातियह्वश्चरणंसूर्यस्य ।
पातिनाभासप्तशीर्षाणमग्निःपातिदेवानामुपमादमृष्वः ॥ ५॥२४॥

पाति । प्रियम् । रिपः । अग्रम् । पदम् । वेः । पाति । यह्वः ।
चरणम् । सूर्यस्य । पाति । नाभा । सप्तऽशीर्षाणम् । अग्निः ।
पाति । देवानाम् । उपऽमादम् । ऋष्वः ॥ ५ ॥ २४ ॥

ऋष्वोदर्शनीयोग्निः वेःगंत्र्याः सर्वव्याप्तायाः रिपोभूम्याः प्रियंअग्रं प्रथमंपदंस्थानं पातिरक्षति यह्वोमहान् सूर्यस्यचरणंचरत्यत्रेतिचरणमन्तरिक्षंपाति नाभानाभौ अन्तरिक्षस्यमध्ये सप्तशीर्षाणंमरुद्गणं पातिदेवानां उपमादं उपमादकं यज्ञंपातिरक्षति ॥ ५ ॥

॥ इतिद्वितीयस्याष्टमेचतुर्विंशोवर्गः ॥ २४ ॥

अथषष्ठी—

ऋभुश्चक्रईड्यंचारुनामविश्वानिदेवोवयुनानिविद्वान् ।
ससस्यचर्मघृतवत्पदंवेस्तदिदग्नीरक्षत्यप्रयुच्छन् ॥ ६ ॥

ऋभुः । चक्रे । ईड्यम् । चारु । नाम । विश्वानि । देवः । वयुनानि । विद्वान् । ससस्य । चर्म । घृतऽवत् । पदम् । वेः । तत् । इत् । अग्निः । रक्षति । अप्रऽयुच्छन् ॥ ६ ॥

ऋभुर्महान् विश्वानिसर्वाणिवयुनानि ज्ञातव्यान् पदार्थान् विद्वान् जानन् देवोग्निः ईड्यं स्तुत्यंचारुमनोज्ञंनामजलंचक्रे करोति नामेतिउदकनामसुपाठात् वेर्व्याप्तस्यससस्यस्वपतः शांतज्वालस्याप्यग्नेः चर्मरूपंघृतवद्दीप्तिमद्भवति सोग्निः तज्जलमप्रयुच्छन् अप्रमाद्यन् पदंस्थानं रक्षतिपालयति इदितिपूरणः ॥ ६ ॥

अथसप्तमी—

आयोनिमग्निर्घृतवन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः ।
दीद्यानःशुचिरृष्वःपावकःपुनःपुनर्मातरानव्यसीकः ॥ ७ ॥

आ । योनिम् । अग्निः । घृतऽवन्तम् । अस्थात् । पृथुऽप्रगानम् । उशन्तम् । उशानः । दीद्यानः । शुचिः । ऋष्वः । पावकः । पुनःऽपुनः । मातरा । नव्यसी इति । कः ॥ ७ ॥

उशानः कामयमानोग्निः घृतवन्तं दीप्तिमन्तंपृथुप्रगाणंपृथुगीतिं उशन्तंकामयमानंयोनिंस्थानमायतनं आअस्थात् आतिष्ठति दीद्यानोद्योतमानः शुचिर्दर्शनीयः शुद्धोवा ऋष्वोमहान् पावकः अन्येषांशोधयिताग्निः मातरामातरौद्यावापृथिव्यौपुनःपुनःनव्यसीनवतरे कः करोति ॥ ७ ॥

अथाष्टमी—

**सद्योजातओषधीभिर्ववक्षेयदीवर्धन्तिप्रस्वोघृतेन ।**
**आपइवप्रवताशुम्भमानाउरुष्यदग्निःपित्रोरुपस्थे ॥ ८ ॥**

सद्यः । जातः । ओषधीभिः । ववक्षे । यदि । वर्धन्ति । प्रऽस्वः । घृतेन । आपःऽइव । प्रऽवता । शुम्भमानाः । उरुष्यत् । अग्निः । पित्रोः । उपऽस्थे ॥ ८ ॥

सद्योजातोग्निः यदियदाओषधीभिः ववक्षेउह्यते तदाप्रवताप्रवणेनमार्गेणगच्छन्त्यः आपइवशुंभमानाः शोभमानास्ताओषध्यः प्रस्वःफलानिप्रसुवानाःघृतेनोदकेनवर्धन्तिवर्धयन्ति आत्मस्थमग्निम् पित्रोर्द्यावापृथिव्योरुपस्थेमध्यप्रदेशेवर्धमानोग्निः उरुष्यत् अस्मान् रक्षतु ॥ ८ ॥

अथनवमी—

**उदुष्टुतःसमिधायह्वोअद्यौद्वर्ष्मन्दिवोअधिनाभापृथिव्याः ।**
**मित्रोअग्निरीड्योमातरिश्वादूतोवक्षद्यजथायदेवान् ॥ ९ ॥**

उत् । ऊँ इति । स्तुतः । सम्ऽइधा । यह्वः । अद्यौत् । वर्ष्मन् । दिवः । अधि । नाभा । पृथिव्याः । मित्रः । अग्निः । ईड्यः । मातरिश्वा । आ । दूतः । वक्षत् । यजथाय । देवान् ॥ ९ ॥

उइतिपादपूरणः स्तुतः अस्माभिःस्तुतः समिधासमिन्धनेनयह्वोमहान् अग्निः पृथिव्या-अधि उत्तरवेद्यां नाभानाभौमध्यप्रदेशे स्थितःसन्दिवःअन्तरिक्षस्य वर्ष्मन् वर्ष्मणिरूपे उदद्यौत द्योतते मित्रः सर्वेषांमित्रभूतः ईड्यःस्तुत्यः मातरिश्वा मातरिअन्तरिक्षे श्वसितिप्राणिति सूर्यरूपेणचेष्टते इतिमातरिश्वा अथवा मातरिअरण्यां श्वसितिनिवसतीतिमातरिश्वा यथाह्यास्कः[1]—मातर्यन्तरिक्षेश्वसितिमातर्याश्वनितीतिवा । दूतः देवानांदूतःसन् यजथाय यज्ञायदेवानावक्षत् आवहतु ॥ ९ ॥

1 नि० ७. २६. ।

अथदशमी–

उद॑स्तम्भीत्स॒मिधा॒नाक॑मृ॒ष्वो॒३॑ऽग्निर्भव॑न्नुत्त॒मोरो॑च॒नाना॑म् ।
यदी॒भृगु॑भ्यः॒परि॑मात॒रिश्वा॑गु॒हासन्तं॑हव्य॒वाहं॑समी॒धे ॥ १० ॥

उत् । अ॒स्त॒म्भी॒त् । स॒म्ऽइधा॑ । नाक॑म् । ऋ॒ष्वः । अ॒ग्निः । भव॑न् ।
उ॒त्ऽत॒मः । रो॒च॒नाना॑म् । यदि॑ । भृगु॑ऽभ्यः । परि॑ । मा॒त॒रिश्वा॑ ।
गुहा॑ । सन्त॑म् । ह॒व्य॒ऽवाह॑म् । स॒म्ऽई॒धे ॥ १० ॥

ऋष्वोमहानग्निः समिधातेजसानाकंस्वर्गं उदस्तंभीत् उदस्तभ्नात् रोचनानांशोभनानांते-जसांमध्ये उत्तमोभवन् उत्कृष्टतमोभवन् मातरिश्वावायुः भृगुभ्यः आदित्यस्यरश्मिभ्यः परि परितः गुहागुहायांसन्तं हव्यवाहं हव्यानांवोढारमग्निं यदियदासमीधेसमैधत तदानाकंअस्त-भ्नादितिसंबन्धः ॥ १० ॥

अथैकादशी–

इळा॑मग्नेपु॒रु॒दंसं॑स॒निंगोः॑शश्व॒त्त॒मंहव॑मानायसाध ।
स्यान्नः॑सू॒नुस्तन॑योवि॒जावाग्ने॒सा॑तेसुम॒तिर्भू॑त्व॒स्मे ॥ ११ ॥ २५ ॥

इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः । श॒श्व॒त्ऽत॒मम् ।
हव॑मानाय । सा॒ध॒ । स्यात् । नः॒ । सू॒नुः । तन॑यः । वि॒जाऽवा॑ ।
अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥ ११ ॥ २५ ॥

पूर्वंव्याख्याता ॥ ११ ॥

॥ इतिद्वितीयस्याष्टमेपञ्चविंशोवर्गः ॥ २५ ॥

प्रकारवइत्येकादशर्चंषष्ठंसूक्तंवैश्वामित्रमाग्नेयं प्रकारवइत्यनुक्रान्तत्वात् प्रातरनुवाका-श्विनशस्त्रयोःसूक्तविनियोगःपूर्वसूक्तएवप्रत्यग्निरुषसस्त्रीणीत्यनेनोक्तः आद्याग्नेयेपशौहविषो-याज्या सूत्रितंच–प्रकारवोमननावच्यमानाएकाचेतत्सरस्वतीनदीनामिति ऐभिरग्नइतिपात्नी-वतग्रहस्ययाज्या सूत्रितंच–आग्नीध्रःपात्नीवतस्ययजत्यैभिरग्नेसरथंयाह्यर्वाङितीति ।

तत्रप्रथमा—

**प्रकारवोमननावच्यमानादेवद्रीचींनयतदेवयन्तः।**
**दक्षिणावाड्वाजिनीप्राच्येतिहविर्भरन्त्यग्नयेघृताची ॥ १ ॥**

प्र । कारवः । मनना । वच्यमानाः । देवऽद्रीचीम् । नयत ।
देवऽयन्तः । दक्षिणाऽवाट् । वाजिनी । प्राची । एति । हविः ।
भरन्ती । अग्नये । घृताची ॥ १ ॥

हेकारवः कर्तारः देवयन्तः देवकामाः यूयंमननामननेनमन्त्रेणवच्यमानाः प्रेर्यमाणाः न्तः देवद्रीचीं देवानश्चतींस्रुचंप्रणयत प्रकर्षेणनयत प्रापयत दक्षिणावाट् आहवनीयस्यदक्षिण तः उह्यमानावाजिनीअन्नवती प्राचीप्रागग्राअग्नयेअग्न्यर्थं हविर्भरन्ती हविर्धारयन्ती घृता घृतेनाक्तास्रुक् एतिगच्छति ॥ १ ॥

अथद्वितीया—

**आरोदसीअपृणाजायमानउतप्ररिक्थाअधनुप्रयज्यो।**
**दिवश्चिदग्नेमहिनापृथिव्यावच्यन्तांतेवह्नयःसप्तजिह्वाः ॥ २ ॥**

आ । रोदसी इति । अपृणाः । जायमानः । उत । प्र । रिक्थाः ।
अध । नु । प्रयज्यो इति प्रऽयज्यो । दिवः । चित् । अग्ने । महिना ।
पृथिव्याः । वच्यन्ताम् । ते । वह्नयः । सप्तऽजिह्वाः ॥ २ ॥

हेअग्ने जायमानस्त्वं रोदसीद्यावापृथिव्यौ नुक्षिप्रंआअपृणाः आपूरय उतापिच प्रयज्यो प्रयष्टव्य अध अनन्तरं दिवश्चित् दिवश्चअन्तरिक्षात् पृथिव्याश्च महिनामहिम्ना । रिक्थाः अतिरिक्तश्चासि अनेनवह्नेरतिशयउक्तः एवंविधस्यतेतव वह्नयः अग्नयः अंशभूत आहवनीयादयः वच्यन्तांप्रेर्यतां किंविधास्तेसप्तजिह्वाः सप्तजिह्वात्मकाः ॥ २ ॥

अथतृतीया—

**द्यौश्चत्वापृथिवीयज्ञियासोनिहोतारंसादयन्तेदमाय।**
**यदीविशोमानुषीर्देवयन्तीःप्रयस्वतीरीळतेशुक्रमर्चिः ॥ ३ ॥**

